# रासलीला
## नाम
# प्रेक्षणकम्





डाक्टर् वे. राघवशर्मणा संदृब्धम्.



(अमृतवाण्यां मुद्राप्य प्रकाशितम्)
1945

# रासलीला नाम प्रेक्षणकम्*

(श्री. डाक्टर् वे. राघवशर्मणा सन्दृब्धम्)

प्रत्येकं पुरुषोत्तमः स भगवान् जीवात्मनो नायिका
नेतेवोपगतः सदा रसमयीं लीलां नरीनर्ति यत् ।
तत्तत्त्वप्रतिबोधकः शुकमुखोद्गीतो हरेर्योऽद्भुतो
गोपीरासविलास एष स बुधैर्नाट्येऽर्पितो रस्यताम् ॥

स्ववाक्यपत्राण्यायोज्य शुकश्लोकसुमैस्सह ।
जुगुंफ राघवो रासलीलां वन्यामिव स्रजम् ॥

## प्रथमं प्रेक्षणकम्

**प्रान्थिकः**— (मायामालवगौलरागेण)

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥[1]

„ (पूर्णचन्द्रिकारागेण)

**तदोडुराजः** ककुभः करैः मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
स चर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः ॥[2]

„ (मनोहरीरागेण)

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम् ।
वनं च तत् कोमलगोभिरञ्जितं जगौ कलं वामदृशां **मनोहरम्** ॥[3]

(कामवर्धनीरागं भगवान् वेणुना वादयति)

(कामवर्धनीरागेण)

---

* १९४१ डिसंबर् मासि मद्रपुरी All-India Radio रङ्गे प्रयुक्तमेतत् ।

1. श्रीमद्भागवते 10. पू. 29. 1. 2. 10. पू. 29. 2. 3. 10. पू. 29. 3.

निशम्य गीतं तद् **अनङ्गवर्धनं** व्रजस्त्रियः कृष्णगृहीतमानसाः ।
आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥[४]

(ततः प्रविशन्ति यथानिर्दिष्टा गोप्यः)

**गोप्यः—** (हुशानीरागेण)

(अन्योन्यम्) हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ।
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥[५]

**ग्रान्थिकः—** (गद्यम् ; पाठ्येन) आः ! दुहन्त्यः काश्चित् त्यक्तदोहाः इतः कृष्णमभिसरन्ति । हन्त ! इतः शिशून् पाययन्त्यः शिशूनपि हित्वा प्रव्रजन्ति । इतश्च काश्चित् प्रयान्ति सन्न्यस्तपतिशुश्रूषाः, अपरा अनपेक्षितभोजनाः, पुनरन्याश्च व्यत्यस्तवस्त्राभरणा अपि कृष्णान्तिकमाकृष्यन्ते ॥[६]

" (मोहनरागेण)

ता वार्यमाणाः पतिभिः पितृभिः भ्रातृबन्धुभिः ।
गोविन्दापहृतात्मानो न न्यवर्तन्त **मोहिताः** ॥
तमेव परमात्मानं संगताः क्षीणबन्धनाः ।
ता दृष्ट्वा भगवानाह वाचःपेशैः **विमोहयन्** ॥[७]

**कृष्णः—**(पाठ्येन) स्वागतं वो महाभागाः ! प्रियं किं करवाणि वः ।
व्रजस्यानामयं कच्चित् ? ब्रूतागमनकारणम् ॥
रजन्येषा घोररूपा ! प्रतियात सुमध्यमाः ।
पतयो वो विचिन्वन्ति शुश्रूषध्वं पतीन् सतीः ॥[८]

**प्रथमा गोपी—** (नायिका (नायकी) रागेण)

मैवं विभोऽर्हति भवान् गदितुं नृशंसं
संत्यज्य सर्वविषयांस्तव पादमूलम् ।

4. 10. पू. 29. 4. 5. 10. पू. 35. 4. 6. 10. पू. 29. 5-7.
7. तत्रैव 8. 11. 17. 8. तत्रैव 18. 19. 20. 22.



भक्ता भजस्व दुरवग्रह मा त्यजास्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ॥[९]

**द्वितीया गोपी—** (सहानारागेण)

प्रेष्ठो भवान् तनुभृतां किल बन्धुरात्मा
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन् ।
तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या
आशां भृतां त्वयि चिरादरविन्दनेत्र ॥[१०]

**ग्रान्थिकः—** (यमुनाकल्याणीरागेण)

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥
नद्याः पुलिनमाविश्य गोपीभी रेम ईश्वरः ॥[११]

## द्वितीयं प्रेक्षणकम्

(ततः प्रविशन्ति यमुनापुलिनगताः कृष्णः गोप्यश्च)

**प्रथमा गोपी—** कृष्ण ! त्वमित उपविष्टो वेणुं वादय, वयं ते वनमालां संग्रथ्य त्वामलंकरिष्यामः ।

**कृष्णः—** यूयम् एकैका एकैकं पुष्पमाहृत्य अस्यै प्रयच्छत; इयं चतुरा मदन्तिकोपविष्टा वैजयन्तीं मालां क्षणेन गुंफिष्यति ।

**द्वितीया गोपी—** तथा । त्वमपि प्रवाहय ते अधरपल्लवाद् वांशिकामृतम् ।

(यमुनाकल्याणीरागं भगवान् वेणुना वादयति)

**प्रथमा गोपी—** कृष्ण ! ग्रथितैव ते वनमाला । अर्पयामश्च ते कण्ठे । अपि मनोहरेयं माला ?

9. तत्रैव 31. 10. तत्रैव 32-33. 11. तत्रैव 42. 45.

**कृष्णः—** अस्या रामणीयकं किमिति वक्ष्यामि ?

**प्रथमा गोपी—** इयं मल्लिका मया आहृता ।

**द्वितीया गोपी—** इयं वनज्योत्स्ना ; एनामतिदूरं गत्वा अहमानयम् ।

**तृतीया गोपी—** इयं तुलसी, मम उपहारः ।

**कृष्णः—** अहो प्रियतमाः ! पुष्पं वा पत्रं वा सर्वमेव सर्वाभिरपि युष्माभिः आहृतम् एकैकमपि परमं सुन्दरं मे । स्वं स्वम् आत्मानमिव यूयम् उच्चित्य मह्यमर्पितवत्यः । यत् सत्यमद्य न पुष्पमालां, किन्तु भवतीनामात्ममालामेव हृदयेन वहामि । अनया च पूर्णश्रीरिव राजेऽहम् ॥

**प्रथमा गोपी—** ननु मम त्वं कृष्ण !

**द्वितीया गोपी—**हुम् ! ममैवासि ।

**तृतीया गोपी—**न हि, ममैव ।

**कृष्णः—**सर्वा एव यूयं मे प्रत्येकं प्रेष्ठाः ।

**गोप्यः—**अहो नः सौभाग्यम् ! नूनं सर्वाभ्योऽपि भुवि वयमभ्यधिकाः![12]

(इति वदन्तीभिः गोपीभिस्सह रासमण्डलमध्यगतो भगवान् वंशीं वादयन् नृत्यति)

**गोप्यः—** (कमाशुरागेण)

त्रिभुवनप्रभोः प्रेमलाभतः त्रिभुवने वयं सर्वतो वराः ।
भुजलतासु नः प्राप्य बन्धनं क नु कथं भवानपगमिष्यति ॥

**ग्रान्थिकः—** (अठानारागेण द्रुतलयेन)

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥[13]

12. तत्रैव 47. 13. तत्रैव 48.



## तृतीयं प्रेक्षणकम्

**ग्रान्थिकः—** (मुखारीरागेण विलम्बलयेन)

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।
अतप्यंस्तमचक्षाणाः विचिक्युश्च वनाद्वनम् ॥[14]

(ततः प्रविशन्ति यथानिर्दिष्टा गोप्यः)

**प्रथमा गोपी—**भोः साल ! सालभुजलत्वया दृष्टो नन्दसूनुः ?[15]

**द्वितीया गोपी—**अयि तमाल ! तमालनीला सुषमा कापि ते पथा गता किम् ?

**तृतीया गोपी—**(वंशस्येव ध्वनिः) हन्त ! इतो गायति वंशीमोहनः । एनमुपधावामि । हा धिक् ! एष कीचको मारुतपूरितो रौति !

**चतुर्थी गोपी—**नन्वितो यमुनाविहारी कालियफणारङ्गे नृत्यन् विराजते, एषाहमुपधावाम्येनम् । हन्त ! कथमियं नः प्रियसख्येव काचित् कालियलीलां नाटयन्ती आत्मानं कृष्णमयतां नयति !

**ग्रान्थिकः—** (भैरवीरागेण विलम्बलयेन)

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता अनुचक्रुस्तदात्मिकाः ॥[16]

(पाठ्येन)

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वा पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥[17]

**प्रथमा गोपी—**हला, सख्यः ! इतः पश्यत ! कयापि गोप्या अपक्रम्य एकान्तमेत्यात्र विहृतवतो भगवतः पदान्येतानि । अहो धन्या सा गोपिका, या ऐकान्तिकी तेन

14. 10. पू. 30. 1. 4. 15. तत्रैव 4-24. 16. तत्रैव 14. 17. तत्रैव 26.

रमते । ............हा कष्टम् ! इतो दृश्यते सा ! कथमुद्धृतैकपदा विषमं तिष्ठति ! तदुपसृत्य पृच्छामः । ............[१८]

(ततः प्रविशति यथानिर्दिष्टा गोपिका)

हला ! क्व स गतो मायामोहनः ? कथमेवं निःश्वसन्तीं तेन त्यक्ता ? किमर्थमेवमुद्धृतैकपददुःस्थितिमनुभवसि ?

**गोपिका—** सख्यः ! कृष्णप्रेमसौभाग्येन यदा यूयं मत्ताः, तदा युष्मान् विहाय मामेकामेव स्वबाहुभ्यामादाय इत एकान्तभोगाय अपयातो नो वल्लभः । चिक्रीड च मया ।[१९] ततः ............। (इत्यर्धोक्ते मुह्यति)

**गोप्यः—** हला ! समाश्वसिहि । ब्रूहि, किं ततः परं निर्वृत्तमिति ।

**गोपिका—**ततः परं मामपि मद आविशत् ।

(चक्रवाकरागेण)

अहं मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ।
हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥
ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवम् ।
न पारयेऽहं चलितुं नय मां यत्र ते मनः ।
एवमुक्तो मया प्राह स्कन्ध आरुह्यतामिति ॥[२०]

(पाठ्येन)

हा धिक् ! जानामि तं मम उद्वहनाय अवनमन्तम्, मामपि तदुपरि आरोहाय पदमुत्क्षिपन्तीम् । तादृश्येव समुद्धृतपदा अद्याप्यत्र तिष्ठामि, स तु अवनतः कुतोऽन्तर्हितो मायी इति न जाने ।[२१]

18. तत्रैव 27-30. 19. तत्रैव 31-32. 20. तत्रैव 36-38. 21. तत्रैव 38-40.



**ग्रान्थिकः—** (असावेरीरागेण)

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ।
अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥
तन्मनस्कास्तदालापाः तद्विचेष्टास्तदात्मिकाः ।
तद्गुणानेव गायन्त्यः नात्मागाराणि सस्मरुः ॥
पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ।
समवेता जगुः कृष्णं तदागमनकांक्षिताः ॥[२२]

## चतुर्थं प्रेक्षणकम्

(ततः प्रविशन्ति कालिन्दीपुलिनगता गायन्त्यो गोप्यः)

**प्रथमा गोपी—** (नाथरामक्रियारागेण)

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ।
दयित दृश्यतां दिक्षु तावकाः त्वयि धृतासवः त्वां विचिन्वते ॥[२३]

**द्वितीया गोपी—** (आहिरीरागेण)

न खलु गोपिकानन्दनो भवान् अखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥[२४]

**तृतीया गोपी—** (पुन्नागवरालीरागेण)

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥[२५]

**ग्रान्थिकः—** (नीलाम्बरीरागेण)

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं हन्त कृष्णदर्शनलालसाः ॥[२६]

(पाठ्येन)

एवमासां विरहितानां ज्वलति शोकानले, भस्मीभूते माने, पुनश्च निर्मलीभूते अन्तःकरणमुकुरे-

22. तत्रैव 41. 43. 44. 23. 10. पू. 31. 1. 24. तत्रैव 4. 25. तत्रैव 9. 26. 10. पू. 32. 1.

(भूपालरागेण)

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥[२७]

(ततः प्रविशति यथानिर्दिष्टो भगवान्)

**ग्रान्थिकः—** (बिलहरीरागेण)

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ।
उत्तस्थुर्युगपत्सर्वाः तन्वः प्राणमिवागतम् ॥
व्यरोचत वृतस्ताभिः पुरुषः शक्तिभिर्यथा॥[२८]

(कापीरागेण)

तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ।
स्त्रीरत्नैरन्वितः प्रीतैः अन्योन्याबद्धबाहुभिः ॥[२९]

(कुन्तलवरालीरागेण)

अङ्गनामङ्गनामन्तरे माधवः माधवं माधवं चान्तरेणाङ्गना ।
इत्थमाकल्पिते गोपिकामण्डले सञ्जगौ वेणुना देवकीनन्दनः ॥[३०]

(यथानिर्दिष्टं रासमण्डले नृत्यति भगवान्)

**गोप्यः—**

जयति कृष्ण ते वेणुवादनं श्रुतिसुखावहं साममारदम् ।
जयति कृष्ण ते हसितमद्भुतं हृदयशर्वरीचन्द्रिकायितम् ॥
जयति कृष्ण सत्-चित्-सुखो भवान् परमपूरुषो नायकोत्तमः ।
नायिकानिभैर्निखिलजीविभिः जयति ते सदा रासनर्तनम् ॥

**ग्रान्थिकः—** (मध्यमादिरागेण)

रेमे रमेशो व्रजसुन्दरीभिः यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥[३१]

(सुरटीरागेण)

गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥[३२]

॥ इति राघवशर्मसन्दृब्धं रासलीलाप्रेक्षणकं संपूर्णम् ॥

---

27. तत्रैव 2. 28. तत्रैव 30. 10. 29. 10. पू. 33. 2. 30. कृष्णकर्णामृतात्. 31, 10. पू. 33. 17. 32. तत्रैव 36.

